Digitized by eGangotri and Sarayu Trust.



जाणिओ — सर्व्वलोकैर्ज्ञातं त्रैलोक्यप्रसिद्धमिति यावत्, कवि सिट्ठि सिट्ठउ — कविसृष्ट्या सृष्टं दिट्ठ दिट्ठउ — दृष्ट्या दृष्टं पिंगलेण वखाणिओ — पिंगलेन विख्यापितं गीअ छंद — तद्गीतानामकं वृत्तमित्यर्थः ॥ वृत्तविशेषणानि पद्यपूरणायेति मंतव्यं। (E).

१९६। अथ विंशत्यचरा कृतिः॥ जहीति। यत्रादौ हस्तो-नरेंद्रद्वयमपि पादः पंचमो जोहलो यत्र स्थायी षष्ठे हस्तो-दृश्यते शल्यमंते नूपुरं। तत् छंदो गीता मुग्धे समीचीनं सर्व-लोकैर्ज्ञातं कविसृष्टिसृष्टं दृष्टिदृष्टं पिंगलेन व्याख्यातं॥ हस्तः सगणः, नरेंद्रो जगणः, पादो भगणः, जोहलो रगणः, शल्यं लघुः, नूपुरं गुरुः। गीतानामकं छंदः। (G).

१९६। विंशत्यचरप्रस्तारे कानिचिच्छंदांसि वदति, जइ आइ इत्यादि। यत्र आदौ हस्तो नरेन्द्रौ द्वावपि पादः पञ्चमो योधो-यत्र स्थाने षष्ठे हस्तो दृश्यते शब्दः अन्ते नूपुरः। तच्छंदः गीता मुग्धानां नीता सर्वलोकैर्ज्ञाता कविश्रेष्ठसृष्टा दिष्ट्या दृष्टा पिंग-लेन व्याख्याता॥ यत्र आदौ हस्तः सगणः, द्वौ नरेंद्रौ जगणौ, पादो भगणः, योधो रगणः पंचमः, षष्ठस्थाने हस्तः सगणस्ततः शब्दो लघुरन्ते नूपुरो गुरुश्छन्दसो नाम गीता, कीदृशी मुग्धानां मनोहराणां मध्ये नीता गणिता सर्वलोकैर्ज्ञाता, कीदृशी गीता कविश्रेष्ठेन सृष्टा दृ[दि]ष्ट्या भाग्येन दृष्टा पिंगलेन व्याख्याता। पशुपतिनैवं व्याख्यातं। कविसृष्टिसृष्टा कविसृष्टौ सृष्टा यदा कवयः सृष्टास्तदा एषापि सृष्टेत्यर्थः, दृष्टिश्छंदःशास्त्रं तेन[तया] दृष्टा। सगण-जगणद्वय-भगण-रगण-सगण-लघुगुरुभिर्वर्णैर्गीता।

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा,

जह[1] फुल्ल[2] केअइ चारु चंपअ[3] चूअ[4] मंजरि[5] बंजुला[6]
सब दीस दीसइ केसु काणण पाण बाउल भम्मरा[7] ।
बह पोम्म[8]गंध बिबंधु[9] बंधुर मंद[10] मंद समीरणा
णिअ[11]केलि कोतुक[12]लास लंगिम[13] लग्गिआ तरुणी[14]
जणा[15] ॥ १९७[16] ॥ गीता ।

---

तद्गणक्रमराहित्येन मात्रावृत्ते हरिगीतेयं [Vide श्लोकः १९१, p. 306.] ।
उक्तं छंदःपारिजाते । सगणं पुरो विनिधाय जद्वयमुज्ज्वलं भगण-
न्ततो — रगणं ततः सगणं निधेहि विधेहि लं गुरुमन्ततः । फणि-
राजनिर्मितवृत्तमचरगीतकं * * * * * हरिगीतकेति पुरा कला-
कृतवृत्तकेऽनियमस्थितं ॥ (H).

१९७ । यथा । उदाहरति । यदि फुल्लानि केतकी-चारुचम्पक-
यूथिमञ्जरी-वञ्जुलानि सर्व्वस्यां दिशि दृश्यते किंशुककाननं पान-
व्याकुलभ्रमराः । वहन्ति पद्मगन्धविबन्धुबन्धुरा मन्दमन्दसमीरणाः
निजकेलिकौतुकलासलङ्गिमलग्नास्तरुणीजनाः ॥ विशेषेण बन्धुर्व्वि-
बन्धुः, बन्धुरा विलक्षणाः । (C).

---

१९७ । १ जहि (A), जइ (B & C). २ फुल्ल (E & F). ३ चम्पइ (B & C). ४ जूअ (C). ५ मरि (E). ६ वञ्जला (B), वज्जुला (E & F). ७ Dropt in (B), म्मरा (C). ८ Dropt in (A), पोम्म (B & C), पम्म (E). ९ वंधु विवंध (A), विवन्ध (B). १० Dropt in (B). ११ णिअ (A). १२ कौतुक (A, E & F). १३ लाङ्गम (B). १४ तरुणि (E). १५ गणा (A). १६ २०० (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



१९७। गीतामुदाहरति, जहेति। जह—यत्र केअइ चारु चंपअ चूअ मञ्जरि वंजुला—केतकिचारुचंपकचूतमञ्जरीवञ्जुलानि [केतकी] चारूणि चंपकानि चंपकपुष्पाणि चूतस्य मञ्जर्य्यः नव-पल्लवानि वञ्जुलानि चैतानीत्यर्थः फुल्ल—पुष्पितानि विकसिता-नीति यावत्, केसु काणण—किंशुककाननं सव दीस दीसइ—सर्वस्यां दिशि दृश्यते, भम्मरा—भ्रमराः पाण वाउम[ल]—पान-व्याकुला मकरंदानुपानप्रमत्ता इत्यर्थः जाता इति शेषः। पम्म गंध विबंधु—पद्मगंधविबंधुः क[म]लसौरभस्य विशिष्टो बंधुरित्यर्थः, वंधुरः विचक्षणो मानिनीमानभंजने इति भावः [मंद मंद—मन्दमन्दः] समीरणा—समीरणः वातः बह—वाति, तरुणीजनाः णिअ केलि कौ[को]तुक लास लंगिम लग्गिआ—निजकेलि-कौतुकलास्यलंगमलग्नाः। (E).

१९७। यथा। यत्र फुल्लकेतकीचारुचंपकचूतमंजरीवंजुलाः सर्वा दिशो दृश्यंते किंशु[क]काननपानव्याकुला भ्रमराः। वहति पद्मगंधं बंधुवंधुरो मंदं मंदः समीरणो निजकेलिकौतुकलास्य-लंगिमलग्नस्तरुणीजनः॥ (G).

१९७। उदाहरणमाह, जहि फुल्ल इत्यादि। यत्र फुल्लाः केतकी-चारुचम्पकचूतमञ्जरीवञ्जुलाः सर्व्वासु दिक्षु दृश्यन्ते किंशुककानने पानोन्मत्ता भ्रमराः। वहति पद्मगंधविशिष्टबंधुबंधुरो मंदमंदं समीरणो निजकेलिकौतुकलासभङ्गीलग्नास्तरुणीजनाः॥ सुवर्ण-केतकीविकाशो वसन्ते, वंजुला अशोकाः, वंजुलः पुंसि तिनिशे वेतसाशोकयोरपि। (H).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



रग्गणा पलंतआ[1] पुणो णरेंद कंतआ सुछक्कएण[2]
हार[3] एक्क मंतही सुसद्द पाअ अंतही सुसक्कएण ।
गंडआ गणेहु ए सुबस्स[4] संख बीसए[5] फणिंद गाउ[6]
तीस मत्त पाअ[7] पत्त हार तीअ भाअएण[8] सद्द आउ[9] ॥
१९८[10] ॥*

१९८। रगणाः पतन्ति पुन[र्न]रेन्द्रः कान्तः सुषट्केन हारमेकं मन्त्रयस्व जानीहि शोभनः शब्दो लघुः सुसत्कतेन षट्केनेत्यर्थः, शोभनप्रकारेणेति वार्थः। * * * त्रिंशतस्तृतीयभागो दश संख्यास्तेन हारा दश, शब्दा लघवो दशेत्यर्थः। (C).

१९८। अथ विंशत्यक्षरचरणस्य वृत्तस्यैकपंचाशदधिक[नव]-नवतिसहस्रोत्तरपंच[षट्]लक्षतमं [६९९०५१] भेदं गण्ड[क]नामकं वृत्तं लक्षयति, रग्गणेति। रग्गणा—रगणः मध्यलघुर्गण इति यावत् पलंतआ—पतति पुनः कंतआ—कांतः णरेंद—नरेंद्रो मध्यगुरुर्जगण इति यावत् पततीति पूर्वेणान्वयः, एवं सुसक्कएण—स्वशक्त्या निजकविलसामर्थ्येन सुछक्कएण—सुषट्केन भण गणषट्केनेत्यर्थः सह एक्क—एकं हारु—हारं गुरुं मंतही—आमंत्रयस्व स्थापयस्वेत्यर्थः, पाअ अंतही—पादांते सुसद्द—

१९८। १ पलअंतआ (A), पुलन्तआ (B). २ सुच्छन्दएण (C). ३ हारु (E & F). ४ सुवण (A). ५ कंकणे (A), टक्कले (B), टक्कणे (C). ६ एम णाउ (A). ७ पाउ (E & F). ८ भाग एसु (A), भाष एसु (B & C). ९ भाउ (A). १० २०१ (A). * This metre has been designated वृत्तं in Pingala's Sanskrit treatise. Vide Ghosha's Compendium, p. 97.—Ed.

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सुशब्दः शोभनो लघुर्द्वय इति शेषः । यत्र संख—संख्याया बीसए—विंशतिः सुवस—सुवर्णाः तीस मत्त—त्रिंशन्मात्राः पाअ पत्त—पादे प्राप्ताः तीअ भाअएण—तृतीयभागेन त्रिंशत्तृतीयभागो-दश [त]त्संख्ययेति यावत् हारः गुरुः स दश लघुः आउ—आयाति पततीति यावत्, ए—एनं गण्डआ—गण्डकं गणेह्न—गणयस्व बुध्यस्वेत्यर्थः, इति फणिंद—फणींद्रः गाउ—गायति ॥ प्रथमं गुरुस्तदनंतरं लघुः पुनः गुरुस्तदनंतरं लघुरेवंक्रमेण यत्र विंशत्य-क्षराणि चरणे पतंति तद्गण्डकनामकं वृत्तमिति फलितार्थः । (E).

१९८ । रग्गेति । रगणः पतति पुनर्नरेंद्रः कांत एतयोः सुषट्केन, हार एकोऽंते सुशब्दः पादांते स्वशक्तिकया । गंडकं गणयस्व वर्णसंख्या विंशतिः फणींद्रो गायति, त्रिंशन्मात्राः पादे प्राप्ताः हारास्तृतीयभागेन शब्द आयातः ॥ नरेंद्रो जगणः, रजयोः षट्कं कर्त्तव्यं, हारो गुरुः, सुशब्दो लघुः । (G).

१९८ । रगण इत्यादि । रगणः पतति पुरो नरेन्द्रः कांतः सुषट्केन, हारम् एवमामंत्रय[स्व] सुशब्दः पादान्ते सुसत्कृतेन । गण्डकां गणय अस्य छंदसो वर्णसंख्यां विधेहि फणीन्द्रो गायति, त्रिंशन्मात्राः पादे, प्राप्तस्तृतीयभागो हारः सुशब्दस्तावान् ॥ आदौ रगणः पतति यत्र पुनर्नरेन्द्रः कान्तः सुषट्केन रगणस्ततो जगणः एवंक्रमेण षड्गणाः कर्त्तव्या हारं गुरुमेकमामंत्रय[स्व] कुरु, सुशब्दं लघुं पादान्ते आमंत्रय[स्व] कुरु, सुसंस्कृतेन सुप्रकारेण गण्डकां छंदसो नाम गणय, अस्य छन्दसो वर्णसंख्यां टंकले कुरु त्रिंश-न्मात्राः पादे, त्रिंशन्मात्रायास्तृतीयभागः प्राप्तः तृतीयभागो दश



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा,

ताब बुद्धि[१] ताब सुद्धि[२] ताब दाण ताब माण[३] ताब[४] गब्ब
जाब जाब[५] हत्थ[६] णच्च[७] बिज्जु रेह[८] रंग णाइ[९] एक्क दब्ब ।
एत्थ[१०] अंत[११] अप्प दोस देब[१२] रोस होइ[१३] णट्ठ सोइ सब्ब[१४]
कोइ बुद्धि[१५] कोइ सुद्धि[१६] कोइ दाण कोइ माण कोइ गब्ब ॥
१९९[१७] ॥ गंडका ।

---

तेन दश गुरवस्तावंतो लघवस्तेन दश लघवः, समुदायेन विंशत्यक्षराणि पादे । टंकशब्दो गौडदेशीयः संख्याकरणवाचकः । (H).

१९९ । उदाहरति । तावद्बुद्धिस्तावत् शुद्धिस्तावद्दानं तावन्मानः तावद्गर्व्वः, यावत् हस्ते हस्ते नृत्य[ति] सर्व्वं विद्युदिव रङ्गमेकं द्रव्यं । स्त्र्यर्थेनात्मनो दोषेण दैवरोषेण भवति नष्टं तदेव सर्व्वं, कुत्र बुद्धिः कुत्र शुद्धिः कुत्र दानं कुत्र मानः कुत्र गर्व्वः ॥ एकं द्रव्यं सर्व्वं सर्व्वात्मकं द्रव्यं, विद्युद्रङ्गं चञ्चलत्वात्, स्त्रीनिमित्तेन यदा तदा इत्यध्याहार्य्यं । (C).

१९९ । गण्डकमुदाहरति, ताबेति । जाब — यावत् हत्थ — हस्ते

---

१९९ । १ and २ transposed in (E & F). ३ Transposed in (E). ४ Dropt in (B). ५ ताब सब्ब (A), जाब once only in (E & F). ६ हच्छ (A). ७ सब्ब between णच्च and बिज्जु (A & C). ८ and ९ dropt in (A & C). ९ Dropt in (B). १० एच्छ (A), dropt in (B & C). ११ चत्त (B), dropt in (C). १२ Dropt in (B & C), दैव (E). १३ Dropt in (A, B & C). १४ दब्ब (E). १५ and १६ transposed in (E). १६ Dropt in (C). १७ २०२ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वे कसा गंध हारा[1] बलश्र दिश्रगणा हत्थ[2] हारा पलंता[3]
एक्कल्ला[4] सल्ल कसा[5] धश्रपश्र[6] सहिश्रा कंकणा[7] श्रंत कंता[8] ।
बीसा एक्क[9] ग्गला जं पलइ लहु गुरू बारहा होइ[10] दीहा[11]
पिंडा[12] बत्तीस श्रग्गा सउ[13] फणि भणिश्रा[14] सद्दरा होइ[15]
मुद्दा[16] ॥ २००[17] ॥

---

विज्जु रेह रंग णाइ — विद्युद्रेखारंगवत् श्रतिचंचलमिति भावः एक्क — एकं दब्ब — द्रव्यं णच्च — नृत्यति, ताव बुद्धि — तावद्बुद्धिः तावत् शुद्धिः तावत् मानः तावत् दानं तावत् गर्वः । [एत्थ श्रंत — एतदन्ते] सोइ — तत् द्रव्यं श्रप्प दोस — श्रात्मदोषेण देव रोस — दैवरोषेण यदीति शेषः णट्ठ — नष्टं होइ — भवति तदेति शेषः, कोइ बुद्धि — [कुत्र बुद्धिः] कुत्र शुद्धिः कुत्र मानः कुत्र दानं कुत्र गर्वः ॥ (E).

१९९ । यथा । तावत् शुद्धिस्तावद्बुद्धिस्तावन्मानस्तावद्दानं तावद्गर्वो यावद्धस्ते नृत्यति विद्युल्लेखारंगणवद् एकं द्रव्यं । एतन्मध्ये श्रात्मदोषेण दैवरोषेण भवति नष्टं तत्सर्वं, का बुद्धिः का शुद्धिः किं दानं को मानः को गर्वः ॥ (G).

१९९ । उदाहरणमाह, ताव बुद्धि इत्यादि । तावद्बुद्धिस्तावत् शुद्धिस्तावद्दानं तावन्मानस्तावद्गर्वः, यावद् यावद्धस्ते हस्ते नृत्यति

---

२०० । १ हार (A). २ हच्छ (A). ३ वलंता (A). ४ एकसा (A, B & C), dropt in (F). ५ कस (F). ६ धच्च बल (A), धस वट (B & C). ७ संखचा (A). ८ कसा (A). ९ एक (A & C). १० पाच (A), होदि (E). ११ दिहा (E). १२ पेंडा (A). १३ श्रग्गा सच (A), श्रग्ग स (E). १४ फणिश्रा (B). १५ हो (C). १६ सुद्दा (A). १७ २०२ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



सर्वविद्युद्रङ्गमेकं द्रव्यं। एतदन्ते आत्मदोषेण दैवरोषो भवति नष्टं तदेव द्रव्यं, तदा का बुद्धिः का शुद्धिः किं दानं को मानः को गर्व्वः॥ बिज्जु रङ्ग इति विद्युद्वत् चंचलं, द्रव्यनाशे आत्मदोषेण दैवरोषः कारणं। विंशत्यचरप्रस्तारस्य दशलचाणष्टचत्वारिंशत्सहस्राणि षट्सप्तत्यधिकानि पंचशतभेदास्तेषु भेदद्वयमुक्तं शेषभेदाः स्वयमवगन्तव्याः। (H).

२००। अथ एकविंशत्यचरा॥ द्वौ कर्णौ गन्धहारौ वलयद्विजगणौ हस्तहारौ वलन्तौ एकं शल्यं कर्णौ ध्वजपटः कङ्कणमन्ते कांतं। विंशतिरेकाधिका यत्र पतति लघुगुरुभिर्द्वादश भवन्ति दीर्घाः, पिण्डिता द्वात्रिंशदग्रं शतं फणिभणिता स्रग्धरा भवति मुग्धा॥ पिण्डिताः पादचतुष्क एकीकृता द्वात्रिंशदधिकशतमित्यर्थः। (C).

२००। अथैकविंशत्यचरचरणस्य वृत्तस्य त्रि[द्वि]पंचाशदुत्तरैकशताधिकसप्तनवतिसहस्रोत्तरं विंशतिर्लचं भेदा [भ]वंति, तत्र पञ्चोत्तरशतत्रयाधिकनवाधिकनवतिसहस्रोत्तरैकलचतमं [त्रिनवत्युत्तरनवशताधिकद्विसहस्रोत्तरत्रिलचतमं ३०२९९३] भेदं स्रग्धरानामकं वृत्तं लचयति, बे कसेति। यत्र प्रथमं बे कसा — द्वौ कर्णौ गुरुद्वयात्मकगणावित्यर्थः, ततो गंध हारा — गंधहारौ लघुगुरू इति यावत्, ततश्च वलअ दिअगणा — वलयद्विजगणौ गुरुलघुचतुष्टयात्मकगणाविति यावत्, ततः हत्थ हारा — हस्तहारौ सगणगुरुकावित्यर्थः यत्र पलंता — पततः, ततश्च एक्कसा — एकलं शल्यं लघुः कसा — कर्णौ गुरुद्वयात्मको गण इत्यर्थः अंत — अंते कर्णगणाग्रे इत्यर्थः धअपअ सहिआ — ध्वजपटसहितः लघ्वादि-

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



त्रिकलगणसहित इत्यर्थः कंता — कांतः कंकणा — कंकणं गुरुरित्यर्थः यत्र पततीति शेषः। जं — यत्र एक्कगला — एकाधिका वीसा — विंशतिः एकविंशतिरिति यावत् लहू गुरू — लघुगुरवः पलइ — पतंति बारहा — द्वादश दीहा — दीर्घाः होहि — भवंति, पिण्डा — पिंडिताः बत्तीस अग्गा सउ — द्वात्रिंशदधिकशतं मात्रा इति शेषः यत्र भवंतीति पूर्वेणान्वयः, सा फणि भणिआ — फणिभणिता मुद्धा — मुग्धा मनोज्ञेति यावत् सद्धरा — स्रग्धरा होइ — भवति ॥ स्रग्धरानामकं तद्वृत्तं भवतीत्यर्थः। (E).

२००। अथैकविंशत्यक्षरा प्रकृतिः॥ बे कस्रेति। द्वौ कर्णौ गंधहारौ वलयद्विजगणौ हस्तहारौ पततः एकं शल्यं कर्णौ-ध्वजपटसहितः कंकणमंते कांतं। विंशतिरेकाधिका यत्र पतंति लघुगुरवो द्वादश भवंति दीर्घाः, पिंडीभूता द्वात्रिंशदधिकं शतं फणिभणिता स्रग्धरा भवति मुग्धा॥ कर्णौ द्विगुरुः, गंधो लघुः, हारो गुरुः, वलयं गुरुः, द्विजश्चतुर्लघुः, हस्तः सगणः, शल्यं लघुः, ध्वजो लघुगुरू, कंकणं गुरुः। (G).

२००। एकविंशत्यक्षरप्रस्तारस्य कानिचित् छंदांस्याह, बे कस्रा इत्यादि। द्वौ कर्णौ गन्धहारौ वलयद्विजगणौ हस्तहारौ पततः, एकः शल्यः कर्णौ ध्वजपटसहितः कंकणमन्ते कान्तं। विंशति-रेकाधिका यत्र पतति लघुगुरुभ्यां द्वादश भवन्ति दीर्घाः, पिण्डः द्वात्रिंशदधिकं शतं फणिभणिता स्रग्धरा भवति शुद्धा॥ यत्र प्रथमं द्वौ कर्णौ, कर्णौ गुरुद्वयगणः कर्णद्वयगणेन गुरुचतुष्टयं, गंधो लघुर्हारो गुरुर्वलयो गुरुस्ततो द्विजगणश्चतुर्लघ्वात्मकस्ततः

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा, ईसा रोस प्पसाद[1]प्पणदिसु[2] बहुसो
सग्ग गंगा जलेहिं
आमूलं पूरिदाए तुहिण कर कला[3]
रुप्प सिप्पीअ[4] रुद्दो[5] ।
जोण्हा[6] मुत्ताह[7] लिल्लं णद[8] मउलि[9] णिहि-
त्तग्ग[10] हत्थेहिँ[11] दोहिं
अग्घं[12] सिग्घं[13] व देत्तो[14] जअइ गिरिसुआ[15]
पाअ पंकेरुहाणं ॥
२०१[16] ॥ स्रग्धरा ।

---

हस्तः सगणो हारो गुरुः पतति, एकः शल्यो लघुः कर्णौ गुरुद्वयं, कर्णः कीदृशः ध्वजपटसहितः ध्वजपटो लघुगुरुरूपो गणस्तत्सहितोऽन्ते कंकणं गुरुः कान्तं। एकाधिका विंशतिर्व्वर्णा लघुगुरुभ्यां, द्वादश भवंति दीर्घा गुरवः, पारिशेष्यान्नव लघवः, पिण्डः शरीरं द्वात्रिंशदधिकशतमात्रात्मकं छंदः समुदायेन भवति, इयं शुद्धा स्रग्धरा फणिभणिता ॥ अत्र सप्तसु वर्णेषु यतिः, पुनः सप्तसु

---

२०१। १ प्पसद (C). २ प्पणतिसु (B). ३ चला (A), गणा (B). ४ Dropt in (B), सिद्दीच (C), सौप्पीच (E). ५ वद्दो (B), रुद्दो (E). ६ जोह्ला (A & B), नोड्र्‌ा (E). ७ मोत्ताद्द (B, C & E), मुत्तद्द (F). ८ णज (B), णच (C), पणद (F). ९ मोउलि (E), मुलि (F). १० णिहित्ताग्ग (C). ११ हच्छेहिँ (A), त्थं (E). १२ चग्गं (B), चग्घं (F). १३ दिगचं (B), सिग्वे (E), सिग्घं (F). १४ देण्तो (B), देन्तो (C), वे देतो (E), बदेंतो (F). १५ गौरिसुचा (E). १६ २०४ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वर्णेषु यतिः, पुनः सप्तसु वर्णेषु यतिः । उक्तं छन्दःपारिजाते । आदौ मो रस्ततो भस्तदनु च नगणः स्याद्यकारस्ततो यौ, सप्ताश्वाश्वैर्विरामः फणिपतिगदिता स्रग्धरेयं प्रसिद्धा । एषा सत्काव्यमुद्रावचनपरिणता मानसानामुदञ्चत्स्रोतोमूर्च्छत्तरङ्गो भवति कवियशःश्रीः प्रमोदं स्रवन्ती ॥ (H).

२०१ । उदाहरति । ईर्ष्यारोषप्रसादप्रणतिषु बहुशः स्वर्गगङ्गाजलैरामूलं पूरितया तुहिनकरकलारूप्यशुक्त्या रुद्रः । ज्योत्स्नामुक्ताफलयुक्तं नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्याम् अर्घं ग्रीष्ममिव ददत् जयति गिरिसुतापादपङ्केरुहाणां ॥ ईर्ष्याजन्यो रोषस्तन्निमित्तये प्रसादस्तदर्थं प्रणतिषु, चन्द्रकलेव शुक्तिपात्रं । अर्थान्तरानुकर्षमाह, ज्योत्स्नेति मत्वर्थे नप्रत्ययः, द्वन्द्वार्थे बग्रब्दः । (C).

२०१ । स्रग्धरामुदाहरति, ईसेति । ईसा रोस प्पसाद प्पणदिसु—ईर्ष्यारोष[प्र]सादप्रणतिषु ईर्षया यो रोषस्तन्निवृत्तये यः प्रसादस्तन्निमित्तं याः प्रणतयस्तास्वित्यर्थः बहुसो सग्ग गंगा जलेहिं—बहुशः स्वर्गगंगाजलौघैः आमूलं पूरिदाए—आमूलं पूरितया तुहिण कर कला रुप्प सिप्पीअ—तुहिनकरकलारौप्यशुक्त्या गो[गिरि]सुआ पाअ पंकेरुहाणं—गिरिसुता[पाद]पंकेरुहयोः दोहिं—द्वाभ्यां णद मौ[मउ]लि णिहित्ताग्ग हत्थेहिँ दोहिं—नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्यां जोओ[ण्हा] मोत्ताह लिल्लं—ज्योत्स्नायुक्तं [मुक्ता]फलयुक्तम् अग्घं सीग्घं देत्तो व—[अर्घं ग्रीष्मं] ददिव रुदो—रुद्रः जअइ—जयति ॥ स्रग्धरा निवृत्ता । (E).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



आइहि जत्थ[1] पाअगण[2] पअलिअ जोहल[3] अंत धरीजे[4]
काहल सद्द गंध इअ मुणि गण[5] कंकण अंत[6] करीजे ।
सद्दइ एक्क[7] भेरि[8] चलु[9] णरवइ फुक्कइ[10] संख[11] सुभव्वा[12]
चामर जुग्ग अंत जहि[13] पअलिअ
एहु[14] णरेंदउ[15] कव्वा[16] ॥ २०२[17] ॥

---

२०१ । यथा । ईर्षारोषप्रसादप्रणतिषु बहुशः स्वर्गगंगाजलैरामूलं पूरितया तुहिनकरकलारौप्यशुक्त्या रुद्रः । ज्योत्स्नामुक्ताफलितं प्रणतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्यामर्घ्यं मीप्रमिव ददज्जयति गिरिसुतापादपंकेरुहयोः ॥ (G).

२०१ । उदाहरणमाह, ईसा रोस इत्यादि । ईश्वरीरोषप्रसाद-प्रणतिषु बहुशः स्वर्गगंगाजलैरामूलं पूरितया तुहिनकरकला-रूप्यशुक्त्या रुद्रः । ज्योत्स्नामुक्ताफलाढ्यं नतमौलिनिहिताग्रहस्ताभ्यां द्वाभ्याम् अर्घ्यं मीप्रं ददत् जयति गिरिसुतापादपङ्केरुहयोः ॥ कर्पूरमञ्जरीसाटकस्थं । (H).

२०२ । आदौ यत्र पादगणः प्रकटितः जोहलोऽन्ते ध्रियते, काहलशब्दगन्धशब्दवाच्या लघवस्तेषां मुनिगणः सप्त लघवः कंकणं

---

२०२ । १ इच्छ (A). २ भगण गण (A). ३ जोहलु (B), जोहणु (C). ४ ठवीजे (A, B & C). ५ एम दिस्रगण (A), इ मुणिगण (B), मुद्द मुणिगण (C). ६ ताह (A & B), ताइ (C). ७ एक (C). ८ भेरी (E). ९ चल (E & F). १० फुकड (A), फुक्कर (B & C). ११ सद्द (A), सखुख (C). १२ सुहब्बा (B & C). १३ जह (E & F). १४ एह (A), हेह (B). १५ णरिंदउ (A & E), णरेंदइ (B), णरेन्द (C). १६ कंदा (E & F). १७ २०५ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



क्रियते हारः। शब्द्यते भेरी चलितो नरपतिः फुल्क्रियते शङ्खः सुभव्यश्चामरयुगं यत्रान्ते प्रकटितं तन्नरेन्द्रकाव्यं ॥ शब्द्यते कथ्यते, फुल्क्रियते उच्यते, काव्यं छन्दः। तथाच यदा नरेन्द्रो गच्छति, तदा पदातियोधाः काहलशब्दसुगन्धिकङ्कणान्यनुसरन्ति, भेरी शब्द्यते, अन्यो नरपतिरनुगच्छति, शङ्खः फुल्क्रियते, चामरयुगं प्रकटीक्रियते। (C).

२०२। अथैकविंशत्यक्षरचरणस्य वृत्तस्य विंशत्युत्तरशतद्वयाधिक-चत्वारिंश[एकोनविंशत्युत्तरपंचशताधिकपंचाश]त्सहस्रोत्तरचतुर्लक्ष-तमं [४५०५१९] भेदं नरेन्द्रनामकं वृत्तं लक्षयति, आइहीति। जत्थ —यत्र आइहि—आदौ पाअगण—पादगणो गुर्वादिर्भगण इति यावत् पअलिअ—प्रकटितः, अंत—अंते भगणावसाने इति यावत् जोहल—जोहलो मध्यलघुरगण इत्यर्थः धरीजे—ध्रियते स्थाप्यत-इति यावत्, ततः काहल सद्द गंध—काहलशब्दगंधाः एकलघव-इत्यर्थः इअ—एते मुणि गण—मुनिगणाः सप्त गणा इति यावत् देया इति शेषः, तथाच रगणानंतरं सप्त लघवः स्थाप्या इति भावः, ताह—ततः सप्तलघ्वनंतरमिति यावत् कंकण—कंकणं गुरुरित्यर्थः करीजे—क्रियते। ततश्च एक्क भेरी[रि]—एका भेरी लघुरित्यर्थः सद्दइ—शब्दायते स्थाप्यत इत्यर्थः, णरबइ—नरपतिर्मध्यगुरुर्जगणः चल—चलति तिष्ठतीत्यर्थः, सुभव्वा—सुभव्यः संख—लघ्वात्मको-गणः फुक्कइ—फुल्क्रियते उच्यते इत्यर्थः जह—यत्र अंत—अंते पादांते चामर जुग—चामरयुगं गुरुद्वयमित्यर्थः पअलिअ—प्रक-टितम् एऊ—एतत् णरिंदउ छंदा—नरेंद्रच्छंदः॥ (E).



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



२०२। आद्ईति। आदौ यत्र पादगणः प्रकटितो जोहलोऽंते ध्रियते, काहलशब्दगंधा इति मुनिगणाः कंकणमंते क्रियते। शब्दायते एका भेरी चलति नरपतिरुच्यते शंखः सुभव्यं चामर-युगमंते यत्र प्रकटितमेतन्नरेंद्रच्छंदः॥ पादो भगणः, जोहलो रगणः, मुनिः सप्त, एवंच सप्त लघवः कार्या इत्यर्थः, कं[कणं] गुरुः, भेरी लघुः क्रियते नरपतिर्जगणः, शंखो लघुः, चामरं गुरुः। (G).

२०२। आइहि जत्थ इत्यादि। आदौ यत्र पादगणः प्रकथ्यते योधोऽन्ते स्थाप्यते, काहलः शब्दः गंधः एवं मुनिगणः कंकणस्तत्र क्रियते। शब्दायते एका भेरी चलितो नरपतिः फुत्कार्य्य शंखं सुभव्यं, चामरयुगमंते यत्र प्रकटितमेतत् नरेन्द्रकाव्यं॥ यत्र आदौ पादगणो भगणः प्रकथ्यते, अन्ते भगणान्ते जोहलो रगणः स्थाप्यते, काहलो लघुः शब्दो लघुर्गन्धो लघुरेवंक्रमेण लघुत्रयं ततो मुनिगणश्चतुर्लघुगणस्तेन सप्त लघव इत्यर्थस्तत्र कंकणं गुरुः क्रियते। एका भेरी शब्दायते लघुः भवतीत्यर्थस्ततो नरपतिर्जगण-श्चलति भवति शंखं फूत्कार्य्य लघुं स्थापय, शंखं कीदृशं सुभव्यं, चामरयुगमन्ते प्रकथ्य गुरुद्वयं स्थाप्यं, एतन्नरेन्द्राख्यं काव्यं॥ अथच यदा नरपतिश्चलति तदादौ पादगणः पदातिगणः प्रकटितो-भवति, योधगणोऽन्ते स्थाप्यते, ततः काहलशब्दः, कर्पूरागुरु-सारादेर्गन्धः, मुनिगणा द्विजा आशीर्वादपुरस्सरमग्रे चलन्ति, कंकणाद्याभरणं क्रियते, भेरी शब्दायते, शंखफूत्कारो जायते, नरेन्द्रस्य पार्श्वे चामरद्वयं स्थाप्यते॥ अत्र द्वादशसु वर्णेषु यतिः, पुनर्नवसु वर्णेषु यतिरथवा त्रयोदशसु वर्णेषु यतिरष्टसु वर्णेषु

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा, फुल्लिअ[1] केसु चंद[2] तह पअलिअ[3]
मंजरि तेज्जइ[4] चूआ
दक्खिण बाउ[5] सीअ[6] भइ पवहइ[7]
कंप बिओइणि[8] हीआ ।
केअइ[9] धूलि सव्व दिस[10] पसरइ[11]
पीअर[12] सव्वउ भासे
आउ[13] बसंत काइ[14] सहि[15] करिअइ[16]
कंत ण थक्कइ[17] पासे ॥
२०३[18] ॥ नरेन्द्रः ।

---

यतिः । उक्तं छंदःपारिजाते । भं रचयाथ रेफनयुगलकमथो जयुगं च यकारं, पिंगलनाग[राज]निगदितमिह वर्णनरेन्द्रमुदारं । भानुविराममेतदथ तदपरवर्णविराममिकल्पं, शिष्टनवाष्टकान्यतरदिति कुरु वेह विभाति सुकल्पं ॥ (H).

२०३ । [उदाहरति] फुल्लं किंशुकं, चन्द्रस्तथा प्रकटितः, मञ्जरिं व्यनक्ति चूतः, दक्षिणो वातः शीतो भूत्वा प्रभवति, कम्पते वियोगिनीहृदयं । केतकीधूलिः सर्व्वदिक्षु प्रसारिता सर्व्वं पीतं भासते,

---

२०३ । १ फुल्लिअ (E & F).　२ चंपअ केसु (A).　३ विअसिअ (A), पलिअ (C).　४ वज्जइ (C).　५ वाअ (B & C).　६ सिअल (A).　७ पववइ (B), परवहइ (C).　८ विजोइणि (F).　९ केअलि (B), केसइ (F).　१० दिसे दिसे (A).　११ पसरिअ (B & C).　१२ Dropt in (B), पीवर (F).　१३ आइ (A & B).　१४ साहि (B), काहि (C).　१५ सखि (F).　१६ करिहउ (A), करिहइ (B & C).　१७ त्यक्क (F).　१८ २०६ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



बिज्जूमाला आई[1] पाए तिअ दिअगण[2] तह बहु[3] गुण जुत्ता
अंते कसा सुद्धा बसा[4] भण फणिबइ कइबर[5] गुण[6] जुत्ता ।[7]
जं बत्तीसा मत्ता थक्के पअ पअ पअलिअ लहु[8] गुरु[9] सोहा
एसो[10] हंसी णामा[11] छंदो[12]
सअल बिबुहअण किअ मण[13] मोहा[14] ॥ २०४[15] ॥

---

आगतो वसन्तः सखि किं करवाणि कान्तो न तिष्ठति पार्श्वे॥ सुवर्णकेतकी वसन्ते स्फुटतीति । (C).

२०३ । नरेंद्रमुदाहरति, फुल्लिअ इति । केसु — किंशुकं फुल्लिअ — पुष्पितं तह — तथा चंद — चंद्रः पअलिअ — प्रकटितः *** (E).

[Here four leaves are wanting in the MS. (E).—Ed.]

२०३ । यथा । पुष्पितं किंशुकं, चंद्रस्तथा प्रकटितः, मंजरीं त्यजंति चूताः, दक्षिणवायुः शीतो भूत्वा प्रवहति, कंपते वियोगिनीहृदयं । केतकीधूलिः सर्वदिक्षु प्रसरति, पीतं सर्वमपि भासते, आगतो वसंतः किं सखि क्रियते, कांतो न तिष्ठति पार्श्वे ॥ (G).

२०३ । उदाहरणमाह, फुल्लिअ इत्यादि । फुल्लितं किंशुकं, चंपकं प्रकटितं, मंजरी गृहीता चूतैर्दक्षिणो वातः शीतो भूत्वा वहति, कम्पते वियोगिनीहृदयं । केतकीधूलिः सर्वासु दिक्षु

---

२०४ । १ पाए (A). २ दिअगह (C). ३ विड (B & C). ४ दिव्वे अक्षा (F). ५ करिवर (A). ६ ग (A). ७ Second quadrant dropt in (C). ८ and ९ transposed in (B & C). १० एसा (A). ११ णागा (A). १२ छन्दो (C). १३ बुद्दी अण मणइ अरु (A), बुहअ अणु मणुहरु (B), बुअह अणइ हरइ (C). १४ सोहा (B & C). १५ २०७ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



प्रसरति, पीतं सर्वं भासते, आगतो वसंतः किं सखि कर्त्तव्यं कांतो-न तिष्ठति पार्श्वे ॥ सुवर्णकेतकीविकाशो वसन्ते । एकविंशत्यक्षर-प्रस्तारस्य विंशतिर्लक्षाणि सप्तनवतिसहस्रं द्विपञ्चाशदधिकमेकशतं भेदास्तेषु भेदद्वयमुक्तं, शेषभेदाः स्वयं ज्ञातव्याः ॥ (H).

२०४। अथ [द्वा]विंशत्यक्षरा ॥ विद्युन्माला[या] आगते[दि] पादे त्रयो द्विजगणाः तथा बङ्गगुणयुक्ताः, अन्ते कर्णो दीयते धन्यो-भणति फणिपतिः कविर्बङ्गगुणयुक्तः । यत्र द्वात्रिंशन्मात्रास्तिष्ठन्ति पदपदप्रकटितलघुगुरुशोभाः, एतत् हंसीनामच्छन्दः सकलसुकवि-जनमनोहरशोभं ॥ (C).

२०४। अथ द्वाविंशत्यक्षरा आकृतिः ॥ विद्युन्माला आदिपादे त्रयो द्विजगणास्तथा बङ्गगुणयुक्ताः, अंते कर्णो दीयते धन्यो भणति फणिपतिः कविवरो गुणयुक्तः । यत्र द्वात्रिंशन्मात्रास्तिष्ठंति प्रकटित-लघुगुरुशोभाः, एतद्धंसीनामच्छंदः सकलविबुधजनकृतमनोमोहं ॥ द्विजश्चतुर्लघुः, कर्णो द्विगुरुः । मो मो गो गो विद्युन्माला । (G).

२०४। द्वाविंशत्यक्षरप्रस्तारस्य भेदमेकं दर्शयति, विद्युन्माला इत्यादि । विद्युन्मालाया आदौ पादस्त्रयो द्विजगणास्तत्र बङ्गगुण-युक्ताः, अन्ते कर्णः शुद्धवर्णः भणति फणिपतिः कविवरगुणयुक्तः । यत्र द्वात्रिंशन्मात्रास्तिष्ठन्ति पदपदप्रकटितगुरुलघुशोभाः, एतद्धंसी नाम च्छंदः सकलबुधजनमनोहरमोहा ॥ यत्रादौ विद्युन्माला-च्छन्दसः पादस्मरणं तेनाष्टगुरवस्ततस्त्रयो द्विजगणाश्चतुर्लघ्वात्मकाः द्वादश लघवइत्यर्थः, कीदृशा बङ्गगुणयुक्ताः, अन्ते कर्णो गुरुयुगरूपः कीदृशः शुद्धवर्णः, फणिपतिः कीदृशः कविवरगुणयुक्तः, द्वात्रिंश-

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा, णेत्ताणंदा उग्गे[1] चंदा

धवल चमर[2] सम सिअ कर[3] बिंदा

उग्गे[1] तारा तेआ हारा[4]

बिअसु[5] कुमुअ बण[6] परिमल कंदा ।

भासे कासा सव्वा आसा[7]

महुर[8] पवण लहु लहिअ[9] करंता[10]

हंसा सद्दे[11] फुल्ला बंधू[12]

सरअ[13] समअ सहि हिअअ हरंता[14] ॥

२०५[15] ॥ हंसी ।

---

न्माचा: कीदृश्य: पदपदप्रकटितगुरुलघुशोभा:, हंसी कीदृशी सकलबुधध[ज]नमनोहरत्वेन मोहरूपा ॥ अत्राष्टसु वर्णेषु यतिस्ततश्चतुर्दशसु वर्णेषु यति: । (H).

२०५ । उदाहरति । नेत्रानन्द उदितश्चन्द्र: धवलचामरसमसितकरवृन्द:, उदयंति तारा * * विकसित: कुमुदगण: परिमलकन्द: । भासयंति काशा: सर्व्वाशा:, मधुरपवनो लघुर्लघुत्वं करोति, हंसा: शब्दायन्ते, फुल्लबन्धुक: शरत्समय: सखि हृदयं हरति ॥ (C).

---

२०५ । १ उग्गो (B). २ चामर (A). ३ थर (B). ४ सारा (F). ५ विश्वस (A). ६ घव (A), गण (C). ७ सारा (F). ८ बज्जव (B). ९ लह लहिष (A), लङ्क बहिश्च (B), लह लहद् (F). १० विलासा (F). ११ सद्दा (A), सद्दं (F). १२ कुन्द विम्ब (B). १३ सद्दष (F). १४ षष हरन्ता (B), हिष रन्ता (C). १५ २०८ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहि[१] आइहि हत्था[२] करअल[३] तत्था[४]

पाअ लहू[५]जुअ कसगणा

ठवि चामरआ[६] काहलजुअ बंका[७]

सल्ल पहिल्लइ[८] बेवि गणा ।

पअ अंतहि सक्को[९] गण पभणिज्जे[१०]

तेइस बस्स पमाण किआ[११]

इअ[१२] मत्तहि[१३] पोमाबइ[१४] पभणिज्जे[१५]

बस्सहि सुंदरिआ भणिआ ॥ २०६[१६] ॥

---

२०५। यथा। नेत्रानंद उदेति चंद्रो धवलचमरसमसितकर-वृंदः, उदयंति ताराः तेजःसाराः, विकसति कुमुदवनं परिमल-कंदं। भास[यं]ते काशाः सर्वा आशाः, मधुरः पवनो लघु लभते विलासान्, हंसाः शब्दायंते, फुल्लंति बंधूकानि, शरत्समयः सखि हृदयं हरति ॥ (G).

२०५। उदाहरणमाह, णेत्ताणंदा इत्यादि। नेत्रानन्द उदेति चन्द्रः धवलचामरसमश्वेतकरवृंदः, उदितास्तारास्तेजसामाधाराः, विकशितं कुमुदवनं परिमलकन्दं। भासन्ते काशाः सर्व्वाशासु

---

२०६। १ जइ (B & C). २ हच्छा (A). ३ करच (A). ४ तच्छा (A). ५ लऊ (F). ६ चामरचं (A), चामर (C). ७ वक्का (B). ८ पहल्लिच (A), वेहिल्लिच (B), वहिल्लिच (C). ९ सक्का (F). १० पभणिज्जइ (F). ११ पमा-णिच्चा (F). १२ एऊ (B, C & F). Here ए should be read as short, Vide श्लोक ५, p, 7. १३ मत्तह (A). १४ पउमावइ (A), पाचावइ (B & C). १५ च भणिज्जे (F). १६ २०९ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



मधुरः पवनो लहलहितो वहति, हंसाः शब्दायंते, फुल्लं बंधूक-पुष्पं, शरत्समयः सखि हृदयं हरति ॥ कीदृशश्चन्द्रः धवलचामर-सदृशश्वेतमयूखसमूहः, लहलहिअ इत्यनुकरणं मन्दं मन्दमित्यर्थः ।

[Here the commentator has described a metre, called तुलनाकुसुम or मदिरा, with examples of his own making both in प्राकृत and संस्कृत. This has been mentioned in Ghosha's Compendium, p. 99]

द्वाविंशत्यक्षरप्रस्तारस्य एकचत्वारिंशल्लक्षाणि चतुर्नवतिसहस्रं चतुरधिकं शतत्रयं भेदास्तेषु भेद एकः प्रदर्शितः, शेषभेदाः स्वयं बोद्धव्याः । (H).

२०६ । यत्रादौ हस्तः करतलं तथा पादः लघुयुगं कर्णगणः, धृत्वा चामरं काहलयुगं वक्रः शल्यं वहिर्दत्त्वा गणद्वयं लघुद्वय-मित्यर्थः । पदान्ते शक्रगणः त्रयोविंशतिवर्णाः प्रमाणीकृताः, इयं मात्राभिः पद्मावती प्रभणिता वर्णैः सुन्दरी भणिता ॥ शक्रगण-आद्यन्तगुरुः षट्कलः, मात्राभिरिति द्वात्रिंशन्मात्रा पद्मावती । [Vide श्लोक १४४, p. 242.—Ed.] आदौ सगणौ द्वौ, गणास्त्रयः सगणा-अन्ते, भगणः सगणः कर्णगणो मध्ये त्रयः पतन्ति । (C).

२०६ । अथ त्रयोविंशत्यक्षरा विकृतिः ॥ यत्रादौ हस्तः करतलं तथा पादो लघुयुगं कर्णगणं—स्थापय चामरकाहलयुगं, वक्रः शल्यौ पुरस्क्रियेते द्वावपि । गणः पादांते शक्रगणः प्रभण्यते त्रयोविंशति-वर्णाः प्रमाणकृताः, एतन्मात्रा हि पद्मावती च भण्यते वर्णैः सुंदरी भणिता ॥ हस्तः करतलं च सगणः, पादो भगणः, कर्णो द्विगुरुः, चामरं गुरुः, काहलं लघुः, वक्रो गुरुः, शल्यो लघुः, शक्रो गुरु-लघुद्वय-गुरुरूपः । पद्मावतीवत् द्वात्रिंशत् संख्याः । (G).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



**आइहि सगणा बेवि गण तिज्जे सगणा अंत।**
**भगणा सगणा कसगण मज्झे तिसि पलंत॥ २०६ (क)॥***

**दोहा।**

---

२०६। त्रयोविंशत्यक्षरप्रस्तारस्य भेदमेकं प्रदर्शयति, जहि आइ इत्यादि। यत्रादौ हस्तः करतलस्ततः पादो लघुयुगं कर्णगणः संस्थाप्य चामरकं काहलयुगं वक्रः शल्यौ प्रथमतः द्वौ ** शक्रगणः प्रभण्यते त्रयोविंशतिर्व्वर्णाः प्रमाणीकृता एतन्मात्रायां पद्मावती प्रभण्यते वर्णैः सुंदरिका वर्णिता॥ यत्रादौ हस्तः सगणस्ततः करतलः सगणस्ततः पादगणो भगणस्ततो लघुयुगं ततः कर्णगणः गुरुयुग्मगणः संस्थाप्य चामरकं गुरुं ततः काहलयुगं लघुयुगं ततो वक्रो-गुरुस्ततः पहिल्लिअ—प्रथमतः शल्यद्वयं पहिल्लिअ—प्राप्तं शल्यद्वयं वा लघुद्वयं प्राप्तं। पादान्ते शक्रगणः षट्कलप्रस्तारस्य चतुर्थो भेदः [Vide Gloss (G), p. 24.—Ed.] स चाद्यन्तगुरुर्मध्यलघुद्वयसहितः, त्रयोविंशतिर्व्वर्णाः प्रमाणीकृताः पदे इत्यर्थः, एतत् छंदो मात्रावृत्ते पद्मावती प्रभण्यते, वर्णवृत्ते सुंदरी वर्णिता। इत्युक्तगणैर्वर्णवृत्ते भवति सुंदरी। मात्रावृत्ते नेयं लीलावती जगणाभावात्। (H).

* [This śloka is found in MS. (F), and its Gloss (G), but not in any of the other MSS.—Ed.]

२०६ (क)। अथास्यैव प्रकारांतरं दोहावृत्तेनाह, आइति। आदौ सगणौ द्वावपि गणास्त्रयः सगणा अंते। भगण-सगण-कर्ण-गणा मध्ये त्रयः पतंति॥ (G).



CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा, जिण[1] वेअ[2] धरिज्जे महिअल लिज्जे[3]
पिट्ठिहि दंतहि ठाउ धरा
रिउ[4] बच्छ[5] बिआरे[6] छलतणु[7] धारे[8]
बंधिअ[9] सत्तु सुरज्जहरा[10] ।
कुल[11] खत्तिअ तप्पे दहमुह[12] कप्पे[13]
कंसअ केसि बिणासकरा
करुणा पअले मेछह[14] बिअले[15] सो[16]
देउ णाराअण[17] तुम्ह[18] बरा ॥
२०७[19] ॥ सुंदरी ।

---

२०७। उदाहरति। येन वेदा ध्रियन्ते, महीतलं गृह्यते पृष्ठे, दन्ते स्थाप्यते धरा, रिपुवक्षो विदार्य्यते * * * वध्यते शत्रुः सुरराज्यहरः। क्षत्रियकुलं ताप्यते, दशमुखः कर्त्त्यते, कंसकेशिविनाशः क्रियते, करुणा प्रकथ्यते, म्लेच्छा विघट्यन्ते, स ददातु नारायणस्तुभ्यं वरान् ॥ सुरराज्य इत्यत्र रेफयोः सवरपठनादैक्यं बोध्यम्। [Vide श्लोक ८, p. 11.—Ed.] (C).

---

२०७। १ जहि (A), जष्पिह (B), जिणि (C). २ विश्व (B), वेद (F). ३ गिज्जे (B & C). ४ Dropt in (B), ठिउ (C). ५ Dropt in (B). ६ रिआरे (A). ७ छलतउ (A), च्छलतनु (C). ८ धारी (B). ९ बद्धिअ (B & C). १० सुसज्जधरा (A), स रज्जहरा (B), रज्जहरा (C). ११ कुण (A). १२ दहमुख (B). १३ कंपे (A). १४ मेच्छउ (B), मच्छह (C). १५ विहले (A). १६ से (B & C). १७ णराइण (F). १८ तुम्ह (A). १९ २१० (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



दुमिलाइ पआसउ[1] बस्स बिसेसहु[2]

दीस[3] फणिंदह चारुगणा

भणु[4] मत्त बतीसह[5] जाणह[6] सेसह

अट्ठह[7] ठाम[8] ठई[9] सगणा ।

गण[10] अस्स ण दिज्जइ[11] कित्ति लहिज्जइ[12]

लग्गइ दोस अणेअ[13] परा[14]

कइ तिस्सि[15] बिरामह[16] पाअह[17] पाअह[17]

ता दह[18] अट्ठ[19] चउद्दहही[20] ॥ २०८[21] ॥

---

२०७। यथा। येन वेदा ध्रियंते, महीतलं गृह्यते पृष्ठे, दंते स्थाप्यते धरा, रिपुवचो विदार्यते, छलतनुधारिणा बध्यते शत्रुः सुराज्यहरः। कुलं क्षत्रियाणां तापितं, दशमुखः कर्त्तितः, कंस-केशिविनाशः कृतः, करुणा प्रकटिता, म्लेच्छा विदारिताः, स ददातु नारायणो युष्माकं वरान् ॥ (G).

२०७। उदाहरणमाह, जझ्नि वेअ धरिज्जे इत्यादि। येन

---

२०८। १ पआसहि (A), पआसइ (F). २ बिसेसहि (A), बिसेसह (F). ३ वीस (A), दक्ख (F). ४ भण (F). ५ बत्तीसह (A). ६ जाणिअ (A), बणिअ (F). ७ अट्ठह (B & C), अट्ठाअ (F). ८ ठाइ (A), हि (F). ९ जं (F). १० गणु (F). ११ किज्जइ (B & C). १२ ण लज्जइ (B), ण णिज्जइ (C), मुणिज्जइ (F). १३ अणेक (B & C). १४ करौ (A), परि (F). १५ तीणि (A). १६ बिसामहि (A), बिरामइ (B & C). १७ पाअहि (A). १८ कर (C). १९ अट्ट (B & C). २० चउद्दहरी (A), उद्दहही (B), छउद्दहही (C). २१ २११ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



वेदो धृतः, महीतलं गृहीतं पृष्ठे, दंताभ्यां स्थापिता धरा, रिपुवचो-विदारितं, छलतनुं धृत्वा बद्धा शत्रुं सुराज्यं कृतं । कुलं क्षत्रियाणां तापितं, दशमुखानि कर्त्तितानि, कंसकेशिविनाशकरः, करुणा येन प्राप्ता, म्लेच्छाः येन विदलिताः, स ददातु नारायणस्तुभ्यं वरं ॥ रिपुवचो हिरण्यकशिपुवचः, छलतनुं वामनरूपं, शत्रुं बलिं, दशमुखानि कर्त्तितानि रावणस्येति शेषः । [The commentator here describes a metre named पूर्णा said to be mentioned elsewhere.—Ed.] त्रयोविंशत्यक्षरप्रस्तारस्य व्यशीतिलक्षाण्यष्टाशीति-सहस्राण्यष्टोत्तराणि षट्शतं भेदास्तेषु भेद एको दर्शितः, शेषभेदाः स्वयं ज्ञातव्याः । (H).

२०८ । अथ चतुर्विंशत्यक्षरा ॥ दुर्म्मिला प्रकाश्यते वर्णविशेषे दृश्यते फणीन्द्रेण चारुगणा भणिताः द्वात्रिंशन्मात्रा ज्ञायन्ताम् अशेषाः अष्टस्थानेषु स्थाप्यन्तां सगणाः । गणोऽन्यो न दीयते कीर्त्तिर्ज्ञायते लगन्ति दोषा अनेकप्रकाराः, कथ्यन्ते त्रयो विरामाः पादे पादे ते क्रियन्ते अष्ट-षट्-दशसु ॥ कीर्त्तिरित्यनन्तरं भव-तीति पूरणीयं, यथा वर्णान्त[?] इति, कुत्र विराम इत्यत आह त इति ते विरामाः । (C).

२०८ । अथ चतुर्विंशत्यक्षरा संस्कृतिः ॥ दुमीति । दुर्मिला प्रकाशते वर्णविशेषे दक्षेण फणीन्द्रेण चारुगणा भणिता मात्रा-द्वात्रिंशद्वर्णिताः शेषेणाष्टाष्टस्थाने यत्र सगणाः । गणोऽन्यो न दीयते कीर्त्तिर्ज्ञायते लगंति दोषा अनेकप्रकारेण, कथय, त्रयो विरामाः पादे पादे, ते दशाष्ट-चतुर्द्दशसु मात्रास्विति शेषः ॥ (G).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा, पहु दिज्जिअ[1] बज्जअ[2] सिज्जिअ[3] टोप्पर[4]
कंकण बाहु किरीट सिरे
पइ[5] कस्सहि[6] कुंडल णं रइ[7] मंडल[8]
ठाविअ[9] हार फुरंत[10] उरे[11] ।
पइ[12] अंगुलि मुद्दरि[13] हीरहि सुंदरि[14]
कंचण[15] रज्जु[16] सुमज्झ[17] तणू
तसु[18] तूणउ[19] सुंदर[20] किज्जिअ[21] मंदर[22]
ठावइ[23] बाणह[24] सेस धणू ॥
२०९[25] । दुर्मिला ।

---

२०८। चतुर्विंशत्यक्षरप्रस्तारे भेदद्वयमाह ॥ दुर्मिलाइत्यादि । दुर्मिलां प्रकाशयति वर्णं विशेषयति वीक्षते फणीन्द्रस्तारुगणभणिता मात्रा द्वात्रिंशत् ज्ञात्वाऽशेषमष्टसु स्थानेषु भवन्ति सगणाः । गणोऽन्यो न क्रियते कीर्त्तिर्ज्ञायते लगति दोषोऽनन्तः, कृत्वा त्रीन् विरामान् पादे पादे तावत् दशसु अष्टसु चतुर्दशसु ॥

---

२०९। १ दिज्जअ (B & C), दिज्जि (F). २ रज्जअ (A), वज्जहि (F). ३ and ४ टोप्पर मत्थअ (A & B). ३ सिद्दिअ (C). ४ सुंदर (F). ५ पहि (A), तह (B), ठइ (F). ६ कस्सह (F). ७ लंवइ (A), णू रइ (C), णवरवि (F). ८ गंडल (A). ९ वाहअ (A). १० तुरंत (A). ११ उरो (F). १२ पअ (A & B). १३ सुंदरि (A & B), मुद्दहि (C). १४ मुकरि (B). १५ कङ्कण (B). १६ वन्द (B). १७ ससज्ज (A), सुसज्ज (B), सु (C). १८ तणू (B). १९ तूणह (B & C). २० सुंदरि (A). २१ Dropt in (B), किज्जअ (C). २२ Dropt in (B). २३ तावह (B & C). २१, २२, २३ and २४ णाचअ पावहिँ तं खणु सुंदरि (A). २५ २१२ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



अष्टौ सगणाः पदे पदे क्रियन्ते, अष्टसगणकरणेन कीर्त्तिर्ज्ञायते प्राप्यते सगणातिरिक्तो गणो न क्रियते, यदि सगणं विनान्यो गणः क्रियते तदानंतदोषो लगति, विरामो दशसु मात्रासु पुनरष्टसु मात्रासु पुनश्चतुर्द्दशसु मात्रासु । वर्णदुर्मिलायां सगणातिरिक्तगण-योगेन मात्रादुर्मिला भवति । [Vide श्लोक १९६, p. 315.—Ed.] (H).

२०९ । उदाहरति । प्रभोर्ज्ञायते वज्रैः स्पृष्टं शिरस्त्राणं कङ्कणं बाह्वौ किरीटं शिरसि प्रतिकर्णं कुण्डलं नूनं रविमण्डलं स्थाप्यते हारः स्फुरन्नुरसि । प्रत्यङ्गुलि मुद्रा हीरकैः सुन्दरी काञ्चनरज्जुः सुमध्ये तनोः तस्य तूणः सुन्दरः क्रियते मन्दरः स्थाप्यते वाणः शेषधनुषि ॥ प्रभोर्महेशस्य, टोपरशब्दः शिरस्त्राणं देशी, वज्रैरिति वज्रमयशिरस्त्राणमित्यर्थः, नूनं निश्चयेन, शेषयुक्ते धनुषि शेषो हि शङ्करधनुषो गुणः । (C).

२०९ । यथा । प्रभुणा दत्तं वज्रैः स्पृष्टं सुंदरं कंकणं बाह्वोः किरीटं शिरसि स्थापितं कर्णे कुंडलं नवरविमंडलवत् स्थापितो-हारः स्फुरन्नुरसि । प्रत्यंगुलि मुद्रिका हीरैः सुंदरकांचनरज्जुः सुमध्यतनौ तस्य तूणः सुंदरकृतो मंदरः वाणः शेषे धनुषि ॥ (G).

२०९ । उदाहरणमाह, पञ्च दिज्जिअ इत्यादि । प्रभुणा दत्तं वज्रैः स्पृष्टं टोप्परं कंकणं बाह्वौ किरीटः शिरसि प्रतिकर्णं कुंडलकं यथा रविमण्डलं, लुप्तोपमा अथवा रूपकालंकारः, स्थापितो हारः स्फुरन्नुरसि । प्रत्यङ्गुलि मुद्रिका हीरकाणां सुंदरकाञ्चनरज्ज्वा सुसज्जा तनुस्तस्य तूणो मन्दरः सुन्दरः स्थापितो वाणः नारायणः शेषधनुषि ॥ टोप्पर इति शिरस्त्राणवाचको देशीयः । त्रिपुर-दाहोद्यतशिवस्य वर्णनम् । (H).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



ठावहु आइहि सक्कगणा तह
सल्ल बिसज्जहु वेबि तहा पर
णेउर सद्दजुअं[1] तह[2] णेउर
एपरि गारह[3] भव्व गणा कर ।
काहल जुग्गल अंत[4] करिज्जसु[5]
एपरि चोबिह[6] वस पआसहु[7]
बत्तिस[8] मत्त[9] पअप्पअ[10] लेक्खहु[11]
अट्ठ[12] भआर[13] किरीट बिसेसहु ॥ २१०[14] ॥

२१० । स्थापयित्वा आदौ शक्रगणं तथा शल्यं विसर्ज्जय द्वयमपि भणितं परतो नूपुरशल्य * * भव्यगणान् कुरु । काहलयुगलमन्ते कुरुध्वम् एवं प्रकारेण चतुर्विंशतिवर्णान् प्रकाश्य द्वात्रिंशन्मात्राः पदे पदे लिख अष्टौ भकारान् किरीटे विशेषय ॥ विसर्ज्जय देहि, विशेषय जानीहि । (C).

२१० । ठावेति । स्थाप्यतामादौ शक्रगणस्तथा शल्यौ सज्जय द्वावपि तथा परौ नूपुरं शब्दयुगं पुनर्नूपुरम् एवं परिपाट्या गुरुलघुरूपान् भव्यगणान् कुरु । काहलयुगलमंते कुरुष्व, एवं परिपाट्या चतुर्विंशतिवर्णान् प्रकाशय, द्वात्रिंशन्मात्राः पदे पदे लिखाष्टौ

२१० । १ सद्दजुआ (F). २ पुण (F). ३ बारह (A), गरऊ (F). ४ तच्छ (A). ५ ठविज्जसु (B & C). ६ चौविह (A), चौविस (F). ७ पआसउ (B & C). ८ वत्तिव (B). ९ त्त (A). १० पआपअ (A). ११ लिक्खऊ (A), लेक्खह (F). १२ अट्ठ (B & C). १३ भआरु (C). १४ २१२ (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.



जहा, बप्पत्र[१] उक्कि[२] सिरे[३] जिणि[४] लिज्जित्र[५]
तेज्जित्र[६] रज्ज[७] बणंत चले बिणु[८]
सोत्रर सुंदरि संगहि लग्गित्र
मारु[९] बिराध कबंध[१०] तहा हणु[११] ।
मारुइ मिल्लित्र[१२] बालि बिहंडित्र[१३]
रज्ज[१४] सुग्गीवह[१५] दिज्ज[१६] अकंटत्र[१७]
बंधु[१८] समुद्द बिणासित्र[१९] राबण[२०]
सो तुत्र[२१] राहब दिज्जउ णिब्भत्र[२२] ॥
२११[२३] ॥ किरीट[२४] ।

---

भगणान् किरीटं विशेषय ॥ शक्रः गुरु-लघुद्वय-गुरुरूपो गणः, शल्यो लघुः, नूपुरं गुरुः, शब्दो लघुः, काहलो लघुः। भगणाष्टकेन किरीटं छन्दो भवतीत्यर्थः। (G).

२१०। ठावड़ आइहि इत्यादि। स्थापयादौ शक्रगणं, तथा शल्यं विसर्ज्जय द्वयं, तथा परे नूपुरं शब्दयुगलं तथा नूपुरम्, अनेन

---

२११। १ पव्वत्र (A). २ टक्कि (A & B), खग्ग (F). ३ करे (A). ४ जा (B), जिणइ (C), जिणिह (F). ५ णिव्जित्र (B & C). ६ तज्जित्र (A), dropt in (F). ७ रज्जु (A). ८ पुण (F). ९ एक्कलि between लग्गित्र and मारु (A), मारि (F). १० कमन्ध (B). ११ असंगक (A), तथा हणु (B). १२ मिल्लत्र (A). १३ वाव लिहल्लित्र (A), वालि वहिल्लित्र (B & C). १४ रज्जु (A & C). १५ सुग्गीवहि (F). १६ दिज्जि (A). १७ अकंटह (A & B). १६ and १७ हत्थहि दिज्जुत्र (C). १८ वन्ध (C), वंधि (F). १९ विभावल्लि (A), विभाणित्र (B). २० रावण (B). २१ मह (F). २२ णिब्भत्र (B & C). २३ २१४ (A). २४ मधू किरीट (A).

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.

Pariçişta Parvan, (Text) Fasc. 1–5 @ /6/ each ...
Prākrita-Paingalam, Fasc. 1-6 @ /6/ each ... ... Rs. 1 14
Prithivirāj Rāsa, (Text) Part II, Fasc. 1–5 @ /6/ each ... ... 2 4
Ditto (English) Part II, Fasc. 1 ... ... 1 14
Prākrta Lakṣaṇam, (Text) Fasc. 1 ... ... ... 0 12
Parāçara Smṛti, (Text) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, ... 1 8
Fasc. 1-6 @ /6/ each
Parāçara, Institutes of (English) ... ... ... ... 7 8
Prabandhacintāmaṇi (English) Fasc. 1–2 @ /12/ each ... ... 0 12
*Sāma Vēda Saṁhitā, (Text) Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; ... 1 8
IV, 1-6; V, 1-8, @ /6/ each Fasc.
Sāṇkhya Sūtra Vṛtti, (Text) Fasc. 1-4 @ /6/ each ... ... 12 6
Ditto (English) Fasc. 1-3 @ /12/ each ... ... 1 8
Suçruta Saṁhitá, (Eng.) Fasc. 1 @ /12/ ... ... 2 4
*Taittereya Saṁhitā, (Text) Fasc. 14-45 @ /6/ each ... ... 0 12
Tāndya Brāhmaṇa, (Text) Fasc. 1-19 @ /6/ each ... ... 12 0
Tattva Cintāmaṇi, (Text) Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-10, ... 7 2
Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II,
Fasc. 1-12 @ /6/ each ... ... ... ...
Trikāṇḍa-Maṇḍanam, (Text) Fasc. 1-2 @ /6/ ... ... ... 14 10
Tul'si Sat'sai, (Text) Fasc. 1-5 @ /6/ each ... ... .. 0 12
Upamita-bhava-prapañca-kathā (Text) Fasc. 1-3 @ /6/ each ... 1 14
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ /12/ ... 1 2
Varāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... ... 4 8
Varsa Krya Kaumudi, Fasc. 1 ... ... ... 5 4
*Vāyu Purāṇa, (Text) Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /6/ ... 0 6
each ... ... ...
Viṣṇu Smṛti, (Text) Fasc. 1-2 @ /6/ each ... ... ... 4 8
Vivādaratnākara, (Text) Fasc. 1-7 @ /6/ each ... ... ... 0 12
Vṛhannāradīya Purāṇa, (Text) Fasc. 1-6 @ /6/ ... ... 2 10
Vṛhat Svayambhū Purāṇa, Fasc. 1-6 ... ... 2 4
... ... ... 2 4

*Tibetan Series.*

Pag-Sam Ṭhi S'iñ, Fasc. 1-4 @ 1/ each
Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-5, ... 4 0
@ 1/ each ... ... ... ... ... 13 0
Rtogs brjod dpag ḥkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. 1-5; Vol. II.
Fasc. 1-5 @ 1/ each ... ... ... ... ... 10 0

*Arabic and Persian Series.*

'Ālamgīrnāmah, with Index, (Text) Fasc. 1-13 @ /6/ each...
Al-Muqaddasi (English) Vol. I, Fasc. 1-2 @ /12/ ... 4 14
Āīn-i-Akbarī, (Text) Fasc. 1-22 @ 1/ each ... ... 1 8
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, ... 22 0
Fasc. 1-5, @ 1/12/ each ...
Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/ each ... ... 29 12
Ditto English Fasc, 1-5 @ 1/ each ... ... ... 37 0
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 5 0
Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /6/ each ... ... 0 6
Catalogue of Arabic Books and Manuscripts ... ... ... 7 2
Catalogue of the Persian Books and Manuscripts in the Library of the ... 1 0
Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ ... 3 0
1/ each ... ... ... ... ...
Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/ each ... ... 21 0
Fihrist-i-Ṭūsī, or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1-4 @ /12/ ... 14 0
each ... ... ... ...
Futūḥ-ush-Shām of Wāqidī, (Text) Fasc. 1-9 @ /6/ each ... ... 3 0
Ditto of Āzādī, (Text) Fasc. 1-4 @ /6/ each ... ... 3 6
Haft Āsmān, History of the Persian Masnawi, (Text) Fasc. 1 ... 1 8
History of the Caliphs, (English) Fasc. 1-6 @ /12/ each ... 0 12
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /6/ each ... ... 4 8
Iṣābah, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... 1 2
Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol. III, 1-10; ... 38 4
Index to Vol. I, Fasc. 10-11; Index to Vol. III, Fasc. 11-12;
Index to Vol. II, Fasc. 10-12 @ /6/ each
Maghāzi of Wāqidi, (Text) Fasc. 1-5 @ /6/ each ... ... 13 2
... ... 1 14

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

CC-0. In Public Domain. Funding by IKS-MoE

Digitized by eGangotri and Sarayu Trust.

Muntakhabu-t-Tawārīkh, ... Rs. 5 10
Muntakhabu-t-Tawārīkh, (English) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 and Index; Vol. III, Fasc. 1 @ /12/ each ... ... 12 0
Muntakhabu-l-Lubāb, (Text) Fasc. 1–19 @ /6/ each ... ... 7 2
Ma'āṣir-i-'Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each ... ... 2 4
Nukhbatu-l-Fikr, (Text) Fasc. 1 ... ... ... ... 0 6
Nizāmī's Khiradnāmah-i-Iskandari, (Text) Fasc. 1-2 @ /12/ each 1 8
Riyāẓu-s-Salāṭīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14
Ṭabaqāt-i-Nāṣirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14
Ditto (English) Fasc. 1–14 @ /12/ each ... ... 10 8
Ditto Index ... ... ... ... 1 0
Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each... 2 10
Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each... 2 4
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
Wis o Rāmīn, (Text) Fasc. 1–5 @ /6/ each ... ... ... 1 14
Ẓafarnāmah, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–8 @ /6/ each .. 6 6
Tuzuk-i-Jahāngirī, (Eng.) Fasc. 1 ... ... ... ... 0 12

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each ... ... ... 50 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8) 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Centenary Review of the Researches of the Society from 1784–1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J.A.S.B.*, 1878) ... ... 4 0
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A.S.B.*, 1868) ... ... ... ... 2 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J.A.S.B.*, 1875) ... ... ... ... ... 4 0
   Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A.S.B.*, 1882) ... ... ... ... ... 4 0
5. Anis-ul-Musharrahīn ... ... ... ... ... 3 0
6. Catalogue of Fossil Vertebrata ... ... ... ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion 3 8
8. Ināyah, a Commentary on the Hidāyah, Vols. II and IV, @ 16/ each... 32 0
9. Jawāmlu-l-'ilm ir-riyāẓī, 168 pages with 17 plates, 4to. Part I ... 2 0
10. Khizānatu-l-'ilm ... ... ... ... ... 4 0
11. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... 40 0
12. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
13. Sharaya-ool-Islām ... ... ... ... ... 4 0
14. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
15. Ditto Grammar " " ... ... ... 8 0
16. Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... 3 0
17. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson... ... ... 1 0
18. Memoir on maps illustrating the Ancient Geography of Kaśmir by M. A. Stein Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4 0

---

Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each ... ... 29 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

20-6-1901.

**Books are supplied by V-P.P.**

CC-0. In Public Domain. Funding by IKS-MoE